ओ३म्

रत्नाऽखिलानन्दशर्मप्रणीतो

# काव्यसंग्रहः

या सत्यार्थप्रकाशिकया

कृतटीकया भाषाटीकया च समेतः

---

अत्र च ईश्वरस्तुतिकाव्यं, धर्मलक्षणकाव्यं
सत्यवर्णनकाव्यं, गप्पवर्णनकाव्यं चेति
लघुकाव्यचतुष्टयं समुपनिबद्धमस्ति

---



---

शकाब्दाः १८२९, ख्रिष्टाब्दाः १९०७

वैक्रमाब्दाः १९६४

१५५९मेरठनगरस्थे स्वामिमेशीनयन्त्रे

मुद्रापितः

प्रथमवारम् } १०००

{ मूल्यम् =) मार्गव्ययः )॥

# भूमिका

अयि सभ्याः !

किं न दृश्यते भवद्भिर्लोके यज्जनाः प्रातरेवोत्थाय [ सियाराम ] [राधेश्याम] ऽऽदिशब्दान्मुखादुद्गिरन्तो न केवलमन्तःकरणं किन्तु भुवनमपि कलुषयन्ति । नावगच्छन्ति च ते कथमीश्वरस्मरणं विधेयमिति । अतः प्रातरुत्थाय सर्वतः पूर्वं कथमीश्वरस्तुतिर्विधेयेति ताह्निबोधयितुं मयेदमीश्वरस्तुति काव्यं प्रणीतम् । धर्मज्ञानाय सत्यप्रवृत्तये पापेभ्यो निवृत्तये चान्यदपि काव्यत्रयम् सर्वलोकोपकाराय संस्कृत-भाषाटीकाभ्यामपि नियोजितम् । तच्चेदं गृहीत्वा कण्ठस्थं विधाय च कृतार्था भवन्तु प्रार्थयन्तु च परमेश्वरं येन करुणावरुणालयः स विभुर्दुःखेभ्यो निवार्य सुखमविरतं विदध्यादिति शम् ॥

भवत्कृपापात्रम्-

श्रीदयानन्दलहरीप्रणेता

वर्त्तमानकविरत्नम्

अखिलानन्द शर्मा शास्त्री

ओ३म्

श्रीमते जगदीश्वराय नमः

# अथेश्वरस्तुतिकाव्यं प्रारभ्यते

---

हे देवदेव करुणार्णव दीनबन्धो !
सृष्टिस्थितिप्रलयकारणभूतशक्ते ! ।
दुःखार्णवे निपतितं जगदेतदद्य
शीघ्रं समुद्धर विवर्धय सौख्यजातम् ॥१॥

(संस्कृत टीका) हे देव देव ! हे करुणार्णव ! हे दीनबन्धो ! हे सृष्टिस्थितिप्रलयकारणभूत शक्ते ! दुःखार्णवे निपतितमेतज्जगत् कृपया शीघ्रं दुःखात्समुद्धर, सौख्यजातं चाद्य विवर्धय॥ काव्येत्र वसन्ततिलका वृत्तम् । वसन्ततिलका तभौ जौ गाविति छन्दःसूत्रलक्षणात् ॥ १ ॥

(भाषा टीका) हे देवों के देव ! हे करुणा के समुद्र ! हे दीनों के रक्षक ! हे सृष्टि स्थिति प्रलयों के कारणरूप शक्ति वाले ! ईश्वर ! आज दुःख के समुद्र में डूबे हुवे इस जगत् को शीघ्र निकालिये और सुखों का समूह कृपा करके इस दीन हीन जगत् के लिये दीजिये । यही आप से एक प्रार्थना है ॥ १ ॥

न त्वां विहाय जगतां परिपालकोन्यो
न त्वां विहाय जगतां परिबोधकोन्यः।
न त्वां विहाय जगतामनुमोदकोन्य
स्तस्मात्त्वमेव शरणं जगतां दयावन्॥२॥

(सं० टी०) नेति—हे दयावन् ! त्वां विहाय न कोप्यन्यो जगतां परिपालकोस्ति तवैव जगत्परिपालक इतिनामस्मरणात्, न कोप्यन्यः परिबोधकोस्ति वेदमुखेन भवानेव बोधक इति यावत्, न कोप्यन्योनुमोदकोस्ति तवैव सौख्य प्रद इति नामस्मरणात्। अतो भवानेव जगतो स्य शरणमिति भावः ॥ २ ॥

( भा० टी० ) हे परमात्मन् ! आप के विना इस जगत् का न कोई दूसरा पालन करने वाला है और न कोई रस्ता बतलाने वाला है तथा न कोई इस के लिये सुखं का देने वाला है। इस लिये सब प्रकार से आप ही इस के रक्षक हैं और कोई नहीं ॥ २ ॥

दौर्भाग्यमेव जगतस्तदलं न यत्ते
तस्योपरीश्वर दयानयनप्रचारः ।
पित्रोः कुदृष्टिकरणन्तनयेषु लोके
किं भाग्यवत्त्वमनुमापयति स्म कश्चित्॥३॥

( सं० टी० ) दौर्भाग्यमिति—हे ईश्वर ! तदलं जगतो दौर्भाग्यमेव, यत्ते तस्योपरि दयार्द्रनयनप्रचारो न। लोके तनयेषु पित्रोः कुदृष्टिकरणं किं तेषां भाग्यवत्त्वमनुमापयति ? दौर्भाग्यमेवेति भावः ॥ ३ ॥

( भा० टी० ) हे परमात्मन्! यह केवल जगत् का दुर्भाग्य ही प्रतीत होता है जो कि आप को उस के ऊपर दयादृष्टि नहीं है क्योंकि पुत्रों के ऊपर माता पिता की कुदृष्टि होना क्या उन के लिये भाग्यवान् होना बतलाया जा सकता है? कदापि नहीं ॥ ३ ॥

यद्यप्ययं नय उपस्थित एव लोके
कर्मानुरूपफलबोधक एकतोऽलम् ।
आलोकयेऽन्यत इदं परितोऽपि वेगा-
न्नैसर्गिकं त्वयि दयालुपदं निविष्टम् ॥४॥

(सं० टी०) यद्यपीति—ईश्वरो न्यायकारी कर्मानुरूपफलद इति नयो यद्यप्येकतो दरीदृश्यते, तथापि स्वभावसिद्धं दयालुरिति पदमन्यत स्त्वयि निविष्टमहमिदमालोकये ॥४॥

( भा० टी० ) यद्यपि कर्मों के अनुकूल फल देने वाले न्यायकारी आप एक तरफ़ से माने जाते हैं तथापि स्व०

भाव ही से आप को बतलाता हुआ दयालु पर भी दूसरी तरफ़ दृष्टिगोचर हो रहा है ॥ ४ ॥

वेदानुकूलचरितानुगतेषु यर्हि
कारुण्यमीश्वर तवानुगतं मतं चेत् ।
विस्मृत्य ते पथमितस्तत एव याताः
कं यान्तु संप्रति निबोधय बोधगम्य ॥५॥

(सं० टी०) वेदेति—हे बोधगम्य परमेश्वर! यर्हि ते कारुण्यं वेदानुकूलचरितानुगतेषु अनुगतं लोकैर्मतं चेत् तर्हि ते पथं विस्मृत्य इतस्ततोगताजनाः संप्रति कं बोधयितारमनुयान्तु, त्वमेव निबोधय ॥ ५ ॥

(भा० टी०) हे परमात्मन् ! यदि आप की कृपादृष्टि वेद के अनुकूल कर्मों के करने वालों में ही हो तो भूल से वेद मार्ग को छोड़कर इधर उधर भटकते हुए पुरुषों को अब कौन मार्ग बतलावे, आप ही कहें ॥ ५ ॥

मार्गं निबोधय विबोधय निद्रितांस्तान्
संबोधय भ्रमगतानपि मूढलोकान् ।
वेगान्निवारय कुमार्गरतान्स्वधर्मे
दृत्तान्तरानतु विधेहि कुरु प्रसादम् ॥६॥

( सं० टी० ) मार्गमिति—हे परमेश्वर ! मार्गं निबोधय अविद्यान्धकारे निद्रितान्विबोधय भ्रमजालपतितान्मूढान्संबोधय कुमार्गरतान्वेगान्निवारय तांश्च स्वस्वधर्मे दत्तचित्तानुविधेहि जगतामुपर्यनेन प्रकारेण प्रसादं कुरुष्वेतिभावः ६

( भा० टी० ) हे परमात्मन् ! आप हम लोगों को सीधा मार्ग बतलायें अविद्या के अन्धकार में सोये हुओं को जगायें भ्रम जाल में पड़े हुये मूढ़ों को छुड़ायें कुमार्ग में चलने वालों को हटाएं अपने २ धर्म में हमारी रुचि को बढ़ाएं, यही आप से प्रार्थना है ॥ ६ ॥

गोमण्डलं प्रतिदिनं विलयं समेति
तारस्वरेण विधवा विरुदन्ति दुःखैः ।
सीदन्ति चार्यनिचया अपि पापपुञ्जै
रद्यापि नो यदि कृपा तव किं ततःस्यात् ७

( सं० टी० ) तव करुणामन्तरा प्रतिदिनं गावोनश्यन्ति, विधवा रुदन्ति, आर्याश्च सीदन्ति अधुनापि ते कृपा न भविष्यति चेत्कदा तस्या अवसरः समागमिष्यतीति भावः ॥७॥

( भा० टी० ) हे परमात्मन् ! हज़ारों गौवों का रोज़ नाश हो रहा है । विचारी विधवा ऊंचे स्वर से रो रही

हैं। आर्यजन दुःखी हो रहे हैं। अब भी यदि आप की कृपा न होगी तो कब होगी ॥ ७ ॥

नैजेन दुःखमुपयाति कुकर्मणालं
लोकोयमित्यपि मृषा न जडानुभावैः।
प्राप्तं यतोजनुभृतां निचयैरमुत्र
सर्वं विपत्तिकलनं सहसैव सर्वैः ॥ ८ ॥

(सं० टी०) निजेनैव कुकर्मणा अयं लोको दुःखी भवतीति यत्कथनं तत्सत्यम् यतः यावद्विपत्तिकलनं तावत्सर्वं जडपाषाणपूजामूलकमेव ॥ ८ ॥

( भा० टी० ) अपने किये हुये कुकर्मों से ही मनुष्य दुःखी होता है ऐसा जो कहना है वह झूंठ नहीं क्योंकि जितनी विपत्तियां आपड़ी हैं वह सब मूर्त्तिपूजामूलक हैं ८

कालाद्यतस्तव नुतिं प्रविहाय लोकै
र्यादृच्छिकान्यनुमतानि मतानि तानि।
कालात्ततो बहुविपत्तयएव लब्धा
स्तत्सांप्रतं कुरु दयामखिलेष्वपि त्वम् ॥९॥

( सं० टी० ) यस्मात्कालादारभ्य—हे परमात्मन् ! तवोपासनां विहाय लोकैर्निजेच्छया

नानामतानि शैवशाक्तवैष्णवादीनि समाश्रितानि तत्कालमारभ्य नानाविपत्तयएव लब्धाः सांप्रतमनुकम्पया त्वं रक्ष रक्ष ॥ ९ ॥

( भा० टी० ) हे ईश्वर! जब से मनुष्यों ने एक आप की उपासना को छोड़कर अपनी २ इच्छा से शैव शाक्त वैष्णव आदि नाना मतों का आश्रयण किया तभी से सैकड़ों विपत्तियां मिलीं इसलिये अब आप करुणादृष्टि से इस जगत् को देखिये ॥ ९ ॥

दुर्भिक्षराजभयरोगवियोगशोक-
मोहादिभिः परिवृतं परितो दयालो ।
नालोकयिष्यसि यदि त्वमिदं जगत्त्वं
का तर्हि संप्रति गतिर्भविताऽस्य देव! ॥१०॥

( सं० टी० ) हे दयालो! दुर्भिक्षादिदुःखैः परितः परिवृतं यदीदं जगद्भवान्नालोकयिष्यति तर्हि सांप्रतमस्य का गतिर्भविष्यति। अतः समालोकयेति भावः ॥ १० ॥

(भा० टी०) हे परमात्मन्! चारों तरफ़ से विपत्तियों से घिरे हुये इस जगत् को यदि अब भी आप दयादृष्टि से न देखेंगे तो फिर इस की क्या दुर्दशा होगी इस लिये आप शीघ्र ही दया करें ॥ १० ॥

मा चेतसीदमनुकल्पय नो ममैते
भक्ताइति प्रणतपालक पूर्णशक्ते! ।

नैसर्गिकी जगदनुग्रहता यतस्ते
गीता समस्तविबुधैरखिलेऽपि विश्वे ॥११॥

(सं० टी०) हे भगवन्! इमे जना मम भक्ता न इति बुद्धिं हृदये मा कुरु यतस्तव सामान्यतय जगदनुग्रहता विबुधैरखिलेऽपि विश्वे गीताऽस्ति ११

( भा० टी० ) हे प्रभो! यह जगत् मेरी भक्ति छोड़ औरों की भक्ति में लगा है ऐसा आप ध्यान न करें क्योंकि आप की दयालुता तो स्वयं ही मानी जाती है ॥ ११ ॥

यद्वद्रविःसकलएव तनोति दीप्तिं
चन्द्रोऽपि तद्वदनुमोदयते मनुष्यान् ।
मेघोऽपि वर्षति यथा सममेव लोके
तद्वत्त्वमीश्वर विधेहि दयार्द्रदृष्टिम् ॥१२॥

( सं० टी० ) यद्वद्रविः सकलएव विश्वे दीप्तिं तनोति तद्वत् इन्दुरपि सर्वानिवाल्हादयति। मेघश्चाप्यविशेषेण यथा वर्षति तथा हे परमात्मन्! त्वमप्येकरूपेण दयां विधेहि। विशेषाविशेषौ मा पश्येत्यर्थः॥ १२ ॥

( भा० टी० ) हे परमात्मन्! जैसे सूर्य सामान्यतया सब जगह एक सा प्रकाश करता है, जैसे चन्द्रमा की रोशनी सब जगह एक सी होती है और जैसे मेघ एक

रूप से सब जगह वर्षा करता है, इसी तरह से आप भी एक रूप से सब जगह कृपा करें ॥ १२ ॥

किं संहरत्यपि कदापि कुमुद्वतीशो
मन्दीकरोति किमहो क्वचिदप्यलं ताम् ।
चाण्डालवेश्मनि निजां द्युतिमेतदेव
सूर्ये पयोधरवरेऽपि निरीक्ष्यतेलम् ॥ १३ ॥

( सं० टी० ) किमिति-कुमुद्वतीशश्चन्द्रः चाण्डालवेश्मनि किं निजां द्युतिं संहरति किं वा तां द्युतिं तत्र मन्दीकरोति ? एवं सूर्यमेघावपि समानतयैव सर्वत्र व्यवहरतः ॥ १३ ॥

( भा० टी० ) क्या चन्द्रमा चाण्डाल के घर में प्रकाश नहीं करता है या उस के मकान में अपने प्रकाश को मन्द करता है । मालूम होता है कि चन्द्रमा का प्रकाश सामान्यतया सब जगह एक सा हुआ करता है । ऐसे ही सूर्य और मेघ भी एक सा व्यवहार वर्त्तते हैं ॥ १३ ॥

किं पक्षपातिन इमे भवता नियुक्ता
वेदादिसूर्यशशिभूपवनादयस्ते ।
नो चेत्तवापि करुणा सममेव युक्ता
सर्वत्र सर्वनियमैरिदमेव सिद्धम् ॥ १४ ॥

(सं० टी०) यदिमे चन्द्रादयो लोकहिताय भवता नियुक्तास्ते किं पक्षपातिनः नो चेत्पक्ष-

पातस्तर्हि तत्रापि कृपा सामान्यतयैव सर्वत्रैक रूपा स्यादिति भावः ॥ १४ ॥

( भा० टी० ) जो कि आपने चन्द्र आदि पदार्थ लोक के लिये बनाये हैं वह क्या पक्षपात से हैं, यदि सामान्य से हैं तो आप की भी कृपा सामान्यतः सर्वत्र होनी चाहिये पक्षपात छोड़ कर सज्जन वर्त्ता करते हैं ॥ १४ ॥

यो रक्षकः सकलविश्वजनस्य मन्ये
नो नाशकः स भविता कथमप्यलं तत् ।
सामान्यतः कुरु कृपां सकलेष्वपि त्वं
मा पश्य गौरवगुणान्मनुजेषु देव ॥१५॥

( सं० टी० ) यः सर्वस्य रक्षकः स भक्षको न भवतीति नियमात्सर्वस्यैव जगतो रक्षा तवो-चितेति समायातम् ॥ १५ ॥

(भा० टी०) जो जगत् का रक्षक है वह भक्षक कदापि नहीं बन सकता है। इस लिये आप भी एक सी कृपा करें ॥१५॥

आपत्तिमाप्य कुरुते स्मरणं मदीयं
नो सौख्यमाप्य शठ एष मनुष्यवर्गः।
नैनत्कुरुष्व हृदये विदितं समस्ते
बालाः क्षुधोपगमनाज्जननीं स्मरन्ति॥१६॥

( सं० टी० ) जगदेतद्विपत्तौ मां स्मरति सौख्येषु नेति हृदये मा कुर्याः । यतो बालाः

क्षुत्रोपगम एव मातरं पितरं च स्मरन्ति दुःख एव ते स्मरणमायातीति भावः ॥ १६ ॥

(भा० टी०) दुःखों के आने पर यह जगत् मेरा स्मरण करता है सुखों में नहीं करता, यह भाव अपने हृदय में न रखियेगा क्योंकि बालक भूख लगने पर ही माता पिता को याद किया करते हैं ॥ १६ ॥

वेदेषु ते गुणगणानुगमैः प्रपूर्णे
या या क्रिया विलिखितास्ति जगद्धिताय ।
सा सा भवच्छरणमेव दिशत्यनन्ता
दीनार्तिनाशक ततः कुरु दृष्टिमार्द्राम् ॥१७॥

(सं० टी०) भवद्गुणवर्णनपरे वेदे यायाक्रिया जगतां हिताय दरीदृश्यते सा सा भवन्तमेव फलदमावोधयति अतो वेदवतामपि भवानेव नायक इत्यर्थः ॥ १७ ॥

( भा० टी० ) आप के गुणानुवादों से भरे हुवे वेदमें भी जो जो क्रिया देखने में आती हैं वह आप ही को सहारे से बतलाती हैं । इस लिये आप ही प्रभु हैं ॥ १७ ॥

सर्वं जगत्करुणया तव सौख्यमेति
दुःखार्णवेपि निपतत्यपराधतस्ते ।
सामान्यभावमपि ते कृपया समेति
भावत्रयेपि तव नायकतैव पूर्णा ॥१८॥

(सं०टी०) तव कृपया जगदेतत्सुखमाप्नोति तवैव समक्षे कृतापराधं दुःखमेति तवैव करुणया समानभावमेति । भावत्रयेप्यतो भवानेव नायक इत्यर्थः ॥ १८ ॥

( भा० टी० ) आप ही की कृपा से यह जगत् सुखी बनता है और आप के सामने अपराध करने से दुःखी बनता है । आप की करुणा से ही सामान्यभाव में रहता है । इसलिये तीनों रूप में आप ही इसके स्वामी हैं १८

दीनार्तिनाशक इति स्वयशोसित रक्ष्यं
दीनान्समुद्धर सदा सकलैरुपायैः ।
नो चेत्तवैव चरितेषु विमानना स्यात्
सर्वान्तरङ्गपरिबोधक सर्वमूर्ते ॥ १९ ॥

( सं० टी० ) यर्हि ते दीननाथ इति नाम सत्यं तर्हि दीनान्पालय । तदभावे तव चरिते विमानना जनानां स्यात् । नामसार्थक्यं चरितैरादर्शयस्वेति भावः ॥ १९ ॥

( भा० टी० ) जो आप का नाम दीनानाथ है तो दीनों की रक्षा कीजिये नहीं तो आप के चरित्रों में विरुद्धता आयगी इसलिये नाम का निर्वाह कीजिये ॥१९॥

किं ते वदामि पुरतोधिकमेतदेव
संप्रार्थये मम मतिस्तव वेदमार्गे ।

लग्ना भवेत्सकलजालमपास्य रम्ये
यस्मिन्गतागत इति व्यवहारनाशः ॥२०॥

(सं० टी०) अतोधिकं तवाग्रे किं वक्तव्यम् इयमेव मे प्रार्थनाऽस्ति यन्मे मतिस्ते वैदिकमार्गे लग्ना स्यात् यत्र मार्गे गतानां गतागतं नश्यतीति भावः ॥ २० ॥

(भा० टी०) आप के सामने और क्या कहूं मेरी यही प्रार्थना है कि मेरा मन वैदिकधर्म को छोड़कर इतरधर्म में कदापि न लगे । सर्वदा इसी में लगा रहे ॥ २० ॥

आर्योत्तमैरनुगते पथि यस्य जन्तो
श्चेतोविशत्यनुदिनं स महाशयत्वम् ।
प्राप्नोति सभ्यपदवीमपि चात्र लोके
तस्मान्ममेयमनिशं त्वयि देव भिक्षा ॥२१॥

(सं० टी०) यस्य पुरुषस्य मनः आर्यैरनुगते पथि रमते सोऽत्र लोके महाशयः सभ्यश्च गीयते अहमपि तथाविधो भवेयमिति तवाग्रतो भिक्षाकरणम् ॥ २१ ॥

( भा० टी० ) जिस पुरुष का मन श्रेष्ठों के अनुगत मार्ग में लगता है वह इस लोक में महाशय और सभ्य कहने लायक होता है । मैं भी ऐसा बनूं यह आप से प्रार्थना है ॥ २१ ॥

एवं भवे प्रतिपदं परमेश्वरं ये
संप्रार्थयन्ति सकलप्रदइत्यवेक्ष्य ।
ते दुःखसागरमपास्य सुखेन पूर्णं
मोक्षं समेत्य विचरन्ति यथेच्छकामाः ॥२२॥

(सं० टी०) एवं जगति ये जनाः परमेश्वरं सकलप्रद इति मत्वा संप्रार्थयन्ति ते दुःखानि विहाय मोक्षमार्गमुपेत्य च यथेच्छकामाः प्रभवन्तीत्यर्थः ॥ २२ ॥

( भा० टी० ) इस प्रकार संसार में जो पुरुष समस्त पदार्थों के देने वाले ईश्वर की प्रार्थना करते हैं वह दुःखों से मुक्त होकर यथेष्ट आनन्द को प्राप्त होते हैं ॥ २२ ॥

---

इति श्रीमद्वर्तमान कविरत्नाऽखिलानन्द शर्मप्रणीतं
सटीकमीश्वरस्तुतिकाव्यं समाप्तम्

---

ओ३म्

अतः परं धर्मलक्षणकाव्यं प्रारभ्यते यस्यायमाद्यः

श्लोकः

प्राप्ते विकारसमये मनसोयदारात्
संरोधनन्तदुपसर्पणभावतोत्र ।
सद्धर्मवर्णनपरेऽतिनवीनकाव्ये
तद्धर्मलक्षणमुदीरितमाद्यमुग्रैः ॥ १ ॥

(सं० टी०) दशकं धर्मलक्षणमिति यन्मनुना प्रतिपादितं तदेव काव्यमुखेन वर्णयितुमनाः कविः प्रथमं धैर्यमाह । प्राप्ते इति–मनसो विकारसमये प्राप्ते सति तदुपसर्पणभावतः अर्थात् विकारोपसर्पणभावात् यदाराच्चेतसः संरोधनं तदेव धर्मवर्णनपरे अत्र नवीनकाव्ये उग्रैर्बुद्धिमद्भिः आद्यं धर्मलक्षणमुदीरितम् । विकारहेतौ सति विक्रियन्ते येषां न चेतांसि तएव धीरा इति भावः । धैर्यलक्षणन्तु दर्पणकारैरभिहितम् । व्यवसायादचलनं धैर्यं विघ्ने महत्यपीति । उदाहरणं त्वस्य * महादेवसमाधिकालः । + दशरथसुतवनगमनसमयश्च । व्यवसा-

---

टि० * श्रुताप्सरोगी० † आहूतस्या० + मनोनवद्वार०

यश्च धर्मोपार्जनम् । तत्फलमार्यत्वम् । काव्येत्र वसन्ततिलकं वृत्तम् ॥ १ ॥

( भा० टी० ) चित्त के विकार का जब समय उपस्थित हो उस समय जो उस विकार से मन का रोकना उसी को धर्म का पहिला लक्षण धैर्य कहते हैं । विकारहेतु के प्राप्त होने पर जिन का चित्त चञ्चल न हों वे ही पुरुष धीर कहने योग्य हैं । इस का उदाहरण महादेव का समाधिकाल और रामचन्द्र के वन जाने का समय है ॥१॥

एवं धृत्याख्यमाद्यं धर्मलक्षणं वर्णयित्वा क्षमाख्यं द्वितीय लक्षणं वर्णयन्नाह—

दोषागमेऽपि खलसंगवशात् प्रवृत्ते
ज्ञानोदयात्सहनशीलतया सहैक्यम् ।
यत्पूरुषस्य बहुरागमये हृदन्ते
भूयात्तदेव नितरां क्षमयानुगम्यम् ॥ २ ॥

( सं० टी० ) खलसंगवशात्प्रवृत्ते दोषागमे सत्यपि यत्पूरुषस्य हृदन्ते ज्ञानोदयात्सहनशीलतया सह सांगत्यं भूयात्तदेव नितरां क्षमयाप्यनुगतम् क्षमावाच्यमित्यर्थः । बहुरागमये इति विशेषणं दोषागमस्य बोध्यम् ॥ २ ॥

(भा० टी०) दुष्ट सङ्ग से उत्पत्ति को प्राप्त हुये नाना दुःखों से पूर्ण दोषों के आने पर जो ज्ञान के उदय से

सहनशीलता के साथ मन की चञ्चलता का रोकना उसे ही भद्र पुरुष क्षमा कहा करते हैं। इसीलिये किसी कवि ने कहा भी है- " क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति। अतृणे पतितोवह्निः स्वयमेवोपशाम्यति" इस का अर्थ अति सरल है॥ २॥

एवं क्षमाख्यं द्वितीयमङ्गं वर्णयित्वा दमाख्यं तृतीयमङ्गं वर्णयिष्यन्नाह-

नैजेषु भिन्नविषयेषु यदिन्द्रियाणां
चाञ्चल्यतोगमनमग्रहणात्प्रवृत्तम्।
तन्निग्रहोदमइति प्रथितः समन्तात्
उक्तश्च धर्मविषये मनुनापि हर्षात् ॥३॥

( सं० टी० ) इन्द्रियाणामनिरोधाच्चञ्चलतया यत्तेषां निज २ विषयेषु गमनं तस्य निरोध एव दमइति कथ्यते। स एव धर्म्माङ्गतया मनुनापि निगदितएव ॥ ३ ॥

(भा० टी०) अपने २ विषयों में चलते हुये इन्द्रियों का जो विधिपूर्वक रोकना उसे दम कहते हैं। वही दम मनु जी ने भी धर्म का तीसरा अङ्ग बतलाया है॥३॥

इत्थं दमाख्यं तृतीयमङ्गं वर्णयित्वा अस्तेय इति चतुर्थमङ्गं निदर्शयन्नाह-

कायेन चित्तविषयेण गिरा च लोके
न ग्राह्यमन्यपुरुषस्य पदार्थजातम्।

येवंविधा जनमतिर्गदिता कवीन्द्रै-
रस्तेयतापरतया किल सैव सर्वैः ॥ ४ ॥

( सं० टी० ) मनसा वाचा कर्मणा परस्वं कदापि कुत्रापि न ग्राह्यमिति या मतिः सैव किल सर्वैः कवीन्द्रैरस्तेयपरत्वेनोक्ता । यत्फलं महर्षिणा पतञ्जलिना योगसूत्रे स्वमुखेनोक्तम् । अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानमिति । यमानुद्दिश्यैतत्कथनं महर्षेः ॥ ४ ॥

( भा० टी० ) मन से, वाणी से, शरीर से दूसरे की चीज़ लेने के लिये इरादा करना चोरी में शामिल है। उस का न करना ही चोरी का त्याग है। उसे अस्तेय कहते हैं। उस का फल योगसूत्र में लिखा है कि सब रत्नों की प्राप्ति ॥ चोरी से एक चीज़ को लेकर समस्त रत्नों का छूट जाना कितनी मूर्खता की बात है। ध्यान दीजिये ॥ ४ ॥

धर्मस्यैवं चतुर्थमङ्गं वर्णयित्वा शौचाख्यं पञ्चममङ्गं
वर्णयितुमनाःप्राह—

देहस्य निर्मलजलेन मनोमलस्य
सत्येन भूतविकृतेरपि विद्यया च ।
यच्छोधनं विमलभावचयेन बुद्धे-
स्तच्छौचमित्यनुमतं मनुना स्वधर्मे ॥ ५ ॥

(सं० टी०) अद्भिर्गात्राणीति पद्यमुद्दिश्येदं

कथनम्। देहस्य तोयेन, मनसः सत्येन, अन्तःशात्मनो विद्यातपोभ्यां, बुद्धेर्ज्ञानेन यच्छोधनं तच्छौचम्। तत्फलन्तु [ शौचात्स्वाङ्गजुगुप्सा-परैरसंसर्ग इति सूत्रमुखेन ] महर्षिभिरुक्तम्। एतदेव धर्मस्य पञ्चममङ्गम् ॥ ५ ॥

( भा० टी० ) शरीर के मल का जल से, मन का सत्य से, अन्तरात्मा का विद्या और तप से, बुद्धि का ज्ञान से जो शुद्ध करना है उसे शौच कहते हैं जिस का फल योग सूत्र में अपने शरीर में घृणा और दूसरों के साथ न मिलना कहा है ॥ ५ ॥

एवं धर्मस्य पञ्चमङ्गं वर्णयित्वा इन्द्रियनिग्रहाख्यं षष्ठमङ्गं वर्णयितुमाह—

दुःसङ्गतो यदिह वेदविरुद्धमार्गे
सर्वेन्द्रियानुगमनं प्रतिभाति लस्य।
वेदोक्तकर्मविषये यमनं बलेन
धर्मस्य लक्षणमुदीरितमेतदेव ॥ ६ ॥

( सं० टी० ) वेदविरुद्धमार्गे दुःसङ्गवशाद्यदिन्द्रियाणां गमनं तस्य वेदोक्तकर्मणि नियमनम् इन्द्रियनिग्रहः। इन्द्रियाणामतिचञ्चलतया सर्वथा नियमनासंभवात्। यथा सामान्यतया स्त्रीप्रवृत्तौ निजपत्नीगमनं निग्रहानुग्रहणभूतम्।

एतच्च व्याकरणमहाभाष्ये स्पष्टम्। एतत्फलन्तु मम्मटपादैर्जितेन्द्रियत्वं विनयस्य कारणमिति पद्यमुखेन काव्यप्रकाशे निदर्शितम् ॥ ६ ॥

( भा० टी० ) दुःसङ्ग के वश से वेदबाह्य मार्ग में जो इन्द्रियों का जाना सामान्यता से पाया जाता है, उस का वेदानुकूल कर्मों में लगाना इन्द्रियों का निग्रह कहाता है। सर्वथा इन्द्रियों का रोकना असंभव है। जैसे सामान्यता से स्त्री में प्रवृत्ति होने पर अपनी स्त्री में नियम करना महाभाष्य में लिखा है। इस का फल काव्यप्रकाश में समस्त सुखों का भोगना बतलाया है ॥ ६ ॥

एवं धर्मस्य षष्ठमङ्गमाख्याय साम्प्रतं धीरित्याख्यं सप्तमङ्गं वर्णयन्नाह -

यत्कार्यमार्यपुरुषैरनुसेवितं तत्<br>
कार्यं समस्तमनुजैरपि कार्यमेव ।<br>
नो तद्विरुद्धमिति या सुविवेचना सा<br>
धीरुच्यते मतिमतां प्रथमैः कवीन्द्रैः ॥ ७ ॥

( सं० टी० ) सज्जनानुष्ठितं कार्यं कर्त्तव्यमिति या मतिः। सैव धीरुच्यते भव्यैरार्यभद्रैरिति स्थितम्॥ तद्विरुद्धविवेचनमस्याः कार्यम्। आर्यजनानुगतस्य धर्माङ्गत्वं वेदानुकूलकार्यत्वात् ॥ ७ ॥

( भा० टी० ) जिस काम को श्रेष्ठ पुरुष करें उस को करना चाहिये, उस से विरुद्ध कदापि न करना चाहिये, ऐसा जो विचार का करना है वही बुद्धि का चिह्न माना जाता है ॥ ७ ॥

एवं धर्मस्य सप्तममङ्गमुक्त्वा विद्याख्यमष्टममङ्गं वर्णयितुमाह—

नित्येषु नित्यमिति वस्तुषु कल्पना या
शुद्धेषु शुद्धमिति सौख्यमये सुखेति ।
आत्मेति चात्मनि यथार्थतया समुक्ता
विद्येति सा तदितरा गदितास्त्यविद्या ॥८॥

( सं० टी० ) नित्ये शुद्धे सुखमये आत्मनि च नित्यं शुद्धं सुखमयं आत्ममयं चेति यज्ज्ञानं सा विद्या, तदितरा अविद्या । सा च विद्या परापरभेदेन द्विधा, तत्र षडङ्गसहिता वेदचतुष्टयात्मिका अपरा, ईश्वरप्राप्तिमूला शास्त्ररूपा परेति मुण्डकोपनिषदि स्पष्टतया प्रतिपादितम् । अविद्या तु अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरेवेति योगदर्शने स्पष्टम् । सैव पञ्चक्लेशमूलेति दिक् ॥ ८ ॥

( भा० टी० ) नित्य पदार्थ में नित्य बुद्धि रखना, शुद्ध में शुद्ध, सुखमय में सुखमय विद्या कहाती है । वह मुण्डक

उपनिषद् में दो प्रकार की मानी हुई है। एक अपरा, दूसरी परा। विद्या से भिन्न अविद्या है जो कि पांच क्लेशों का मूल योगदर्शन में मानी गई है॥ ८॥

एवं धर्मस्याष्टमं लक्षणमुक्त्वा सत्याख्यं नवमं
लक्षणं वक्तुमनाः प्राह—

ज्ञानादसंभवतयानुगते पदार्थे
नेदं कथंचिदपि संभवितेति भावः।
धर्मैकवर्णनपरे लघुकाव्यरत्ने
किं नो मया निगदितः किल सत्यबुद्ध्या॥९॥

( सं० टी० ) असंभवदोषग्रस्ते पदार्थे नेदं कदापि संभवमिति यज्ज्ञानं तत्सत्यम्। तच्च ज्ञानोदयादिति हेतुः। फलं त्वस्य सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वमिति योगदर्शने समुक्तम्। न हि सत्यात्परो धर्मः। सत्यमेव जयते नानृतम्। सत्येनोत्तभिता भूमिरिति सर्वत्र सत्यस्यैव मुख्यत्वमुक्तम्॥ ९॥

( भा० टी० ) असम्भवरूप दोष से ग्रस्त पदार्थ में कदापि संभवबुद्धि न करना सत्य कहाता है। जिस पदार्थ का लक्षण और प्रमाण से ज्ञान न हो उसे मिथ्या मानना चाहिये। चार प्रकार के प्रमाणों से अतिरिक्त पदार्थ कोई नहीं है॥ ९॥

एवं नवमं धर्मलक्षणं वर्णयित्वा अक्रोधाख्यं दशमसङ्गं वर्णयन्नाह–

शत्रोर्विकारजनके मनसो विरोधे
प्राप्ते प्रयोजनवशात्परमेपि योयम् ।
चित्ताविकारविषयः स महात्मवर्यै
रक्रोध इत्यनुमतो मनुना प्रदिष्टः ॥ १० ॥

(सं० टी०) मनसोविकारजनके परमे शत्रोर्विरोधे प्रयोजनवशात्प्राप्ते सति योयं चित्ताविकारविषयः स महात्मवर्यैरक्रोध इत्यनुमतः १०

(भा० टी०) मन के विकारजनक शत्रु के विरोध उपस्थित होने पर जो चित्त के ऊपर विकार न आना वह अक्रोध कहाता है। वही धर्म का दशम अङ्ग है ॥१०॥

एवं दशाङ्गं धर्मं वर्णयित्वा यमानां नियमानाञ्च तदनुकूलत्वात्तेषामपि वर्णनमाह–

दुःखानुचिन्तनमहर्दिवमात्महेतोः
स्वस्मात्परस्य मनसापि वदन्ति हिंसाम् ।
तत्त्यागएव नितरां गदितोस्त्यहिंसा-
रूपोयमेषु परमर्षिभिरुक्तएव ॥ ११ ॥

(सं० टी०) स्वस्मात्परस्य मनुजस्य निजप्रयोजनसिद्धये मनसा वाचा कर्मणा दुःखानुचिन्तनं

हिंसा, तत्त्यागएव अहिंसापदवाच्यः अतएव अहिंसा परमोधर्म इत्युक्तम्। तत्फलन्तु अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्याग इति योगसूत्रे समुक्तम्। वैरत्यागे मैत्र्यं, मैत्र्ये सौख्यमिति सामान्यतया धर्मः ॥ ११ ॥

( भा० टी० ) तन मन धन से दूसरे के लिये दुःख पहुंचाना हिंसा में दाखिल है। उस का छोड़ना ही अहिंसा कहाती है, वही परमधर्म है, जिस का फल वैरत्याग, सब से मित्रता और सर्वत्र सुख है ॥ ११ ॥

अस्तेयसत्ययोर्वर्णनं मनुप्रोक्तलक्षणेषु समुक्तम्,
साम्प्रतं ब्रह्मचर्यमाह—

यज्ञोपवीतपरिधानत एव गेहाद्
दूरे गुरोःकुलमवाप्य परिश्रमेण।
वेदादिशास्त्रपठनाय निबन्धनं यत्
तद्ब्रह्मचर्यमिति सङ्गदितं यमेषु ॥ १२ ॥

( सं० टी० ) यज्ञोपवीतसंस्कारादनन्तरम् गुरुकुलमवाप्य, वेदादिपठनाय यद् व्रतबन्धनं तद् ब्रह्मचर्यम्। ब्रह्म वेदस्तदध्ययनाय कृतं व्रतबन्धनं ब्रह्मचर्यम्। तत्फलन्तु ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभ इति योगदर्शने स्पष्टमेव। ब्रह्मचर्येण

कन्या युवानं विन्दते पतिमित्यादि बहुधा वदपि प्रतिपादितमेव ॥ १२ ॥

( भा० टी० ) यज्ञोपवीत संस्कार से लेकर गुरुकुल में जाके जो वेद पढ़ने के लिये व्रतबन्ध करना है वह ब्रह्मचर्य है। उस का फल वीर्यलाभ प्रत्यक्ष है ॥ १२ ॥

एवं ब्रह्मचर्यमावर्ण्य अपरिग्रहं वर्णयन्नाह—

भिक्षादिवृत्तिमधिगम्य विधिप्रयुक्ता-
मागन्तुकस्य विधिवर्जितवस्तुराशेः ।
यद्वर्जनं तदपरिग्रह इत्यमुत्र
सर्वे वदन्ति कवयो मुनयो नयज्ञाः ॥१३॥

(सं० टी०) भिक्षावृत्तिमाश्रित्य वेदविरुद्ध-धान्यस्य यद्वर्जनं तदपरिग्रहवाच्यम्। जीवनाय मनुना भिक्षादयो वृत्तय उक्ताः। प्रतिग्रहस्तु न कदापि ग्राह्यः। प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेदिति मनुवचनात्। एतत्फलन्तु अपरि-ग्रहस्थैर्ये जन्मकथन्तासंबोध इति पातञ्जल-योगदर्शने प्रतिपादितम्। एतत्सेवनेनैव त्रिकाल-दर्शित्वं भवतीति भावः ॥ १३ ॥

( भा० टी० ) भिक्षा आदि वृत्ति का आश्रय लेकरके जो वेदबाह्य कुधान्य का न लेना वह ही अपरिग्रह कहलाता

है। उस का फल तीनों कालों का बोध होना कहा है। पहिले ऋषियों में यह था। आज कल ब्राह्मणों ने नष्ट भ्रष्ट कर दिया है ॥ १३ ॥

एवं यमानां वर्णनं विधाय नियमानां वर्णनमाह तत्र शौचस्य कृतवर्णनत्वात्सन्तोषाद्या निर्दिश्यन्ते—

अल्पेपि वस्तुनि विधेरुदयादुपेते
निर्वाह एव करणीय इति प्रलोक्य ।
या शान्तिरुत्तमगुणा सकलार्थजाते
सन्तोष इत्यनुमता किल सैव विज्ञैः ॥१४॥

( सं० टी० ) प्रारब्धवशादल्पेपि पदार्थे समुपलब्धे सति निर्वाहबुद्ध्या वस्त्वन्तरानिच्छनं स एव सन्तोषः, तत्फलं सन्तोषादनुत्तमसुख-लाभ इति महर्षिणोक्तम् । * नीतिकारैरपि तृष्णाक्षयसुखस्य सर्वोत्तमसुखत्वमुक्तम् ॥१४॥

( भा० टी० ) प्रारब्धवश से समय पर थोड़े ही पदार्थ के आने से निर्वाह बुद्धि करके जो तृष्णा का रोकना है वह सन्तोष में दाख़िल है। जिस का फल सर्वोत्तम सुखलाभ माना गया है। इसी के बिना आज कल के मनुष्य दीन हीन से प्रतीत होते हैं ॥ १४ ॥

---

टि० यच्च कामसुखं+सन्तोषामृत+सन्तोषेण विना यः+सन्तोष एव पुरु+दक्षिणाशाप्र+तेनार्घ·तं श्रुतं तेन+सर्वोत्तमम् ॥

एवं सन्तोषं वर्णनयित्वा तपोवर्णयन्नाह—

वेदोक्तकर्मनियमाद्व्रतबन्धनादौ
यद् दुःखमापतति तस्य यथाकथञ्चित् ।
प्राणात्ययेपि सहनं तदुदीरयन्ति
सत्यं तपो नियमदत्तनिजान्तरङ्गाः ॥१५॥

( सं० टी० ) वेदोक्तकर्मवशात् प्रायश्चित्तादिषु चान्द्रायणकृच्छ्रचान्द्रायणद्वारा यद् दुःखमुत्पद्यते तस्य सहनं तपः, शीतोष्णक्षुत्पिपासाव्याधिचतुष्टयसहनं तदिति भावः , तत्फलं कायेन्द्रियशुद्धिरशुद्धिक्षयात्तपस इति योगदर्शने प्रतिपादितम् । अन्यदपि तद्वर्णनं नीतिकारैस्तत्र तत्रोपन्यस्तम् ॥ १५ ॥

( भा० टी० ) वेदोक्त कर्मों के बीच में जो नाना व्रत प्रायश्चित्तों के कारण दुःख का सहन यानी भूख, प्यास, सर्दी, गर्मी को जो भोगना पड़ता है, उसे तप कहते हैं। वेदबाह्य तप को तप नहीं कहते हैं। जिस का फल अशुद्धि का क्षय माना जाता है ॥ १५ ॥

एवं तपोवर्णयित्वा स्वाध्यायमाह—

नित्यं गुरोः सविधमेत्य नितान्तभक्त्या
सर्वं विधाय विधिबोधितकृत्यजातम् ।

वेदोपवेदपरिशीलनमेतदेव
स्वाध्यायतामुपदधाति जनोत्तमेषु ॥ १६॥

(सं० टी०) नित्यं संध्यादिकं विधाय गुरोरुपान्ते यत्प्रतिदिनं वेदाध्ययनं तत्स्वाध्यायपदवाच्यं तत्फलन्तु स्वाध्यायादिष्टदेवतासंप्रयोग इति स्पष्टम्। अतएव वेदाभ्यासो हि विप्रस्य परमं तप उच्यत इति मनुना प्रतिपादितम्। वेदेनैवेश्वरज्ञानलाभात् ॥ १६ ॥

( भा० टी० ) प्रतिदिन अग्निहोत्रादि कर्म करके गुरु के पास जाकर नम्रता से वेद वेदाङ्गों का जो पढना है, उसे स्वाध्याय कहते हैं। जिस का फल ईश्वर की प्राप्ति साफ़ तौर पर योगदर्शन बतलाता है ॥ १६ ॥

एवं स्वाध्यायमुक्त्वेश्वरप्रणिधानमाह—

सर्वत्र सर्वमय ईश्वर एव सर्वा-
धारोऽजरोऽमर इति प्रविचार्य्य चित्ते।
तस्यैव सद्गुणगणेष्वनुरागबुद्धि
र्द्वारैरहर्निशमुदा हृदये समन्तात् ॥ १७ ॥

( सं० टी० ) सर्वव्यापी सर्वाधार ईश्वर एव नान्य इति मत्वा यत्तद्गुणानुरागित्वं तदीश्वरप्रणिधानम्। तत्फलं समाधिसिद्धिरीश्वर-

प्रणिधानादिति योगकारैरुदाहृतम् । समाधिसिद्धौ सर्वसिद्धिः । यद्दृश्यं यद्दूदृश्यं सर्वं दृश्यं समाधिसिद्धेनेति भावः । अतो योगाभ्यासोऽभ्यसनीय इति पूर्वाचार्याः ॥ १७ ॥

( भा० टी० ) इस जगत् का स्वामी एक ईश्वर ही है दूसरा कोई नहीं। ऐसा जान कर उसी के गुणों में अनुराग होना ईश्वरप्रणिधान कहाता है। उस का फल समाधि सिद्धि है ॥ १७ ॥

सद्धर्मवर्णनपरं लघुकाव्यमेतद्
ये वर्तमानकविरत्नकृतं स्वकण्ठे ।
संस्थाप्य वैदिकपथेऽन्वहमेव रागाद्
यास्यन्ति ते न भवजालपथं कथंचित् १८

(सं० टी०) वैदिकधर्मवर्णनपरमेतल्लघुकाव्यं ये जनाः पठित्वा तत्रैवानुरक्ता भविष्यन्ति ते भवसागरदुःखैरयुक्ता भविष्यन्तीति भावः १८

( भा० टी० ) वैदिकधर्म के बतलाने वाले इस छोटे काव्य को जो मनुष्य पढ़ कर वेदानुकूल कर्मों को करेंगे वह समस्त दुःखों से छुटकर सर्वदा आनन्द का अनुभव करेंगे ॥ १८ ॥

इति श्रीमद्वर्तमान कविरत्नाऽखिलानन्दशर्मप्रणीतं सटीकं धर्मलक्षणकाव्यं समाप्तिमितम् ॥

—:※:—

अतः परं × सत्यवर्णनकाव्यं प्रारभ्यते, यस्यायमाद्यः

### श्लोकः

यानीश्वरेण ऋषिभिश्च परार्थहेतो-
राविष्कृतानि शुभमार्गनिबोधकानि ।
तान्येव मान्यपुरुषैर्निजधर्मवृद्ध्यै
बोध्यानि सत्यमिदमाद्यमलं प्रदिष्टम् ॥१॥

( सं० टी० ) यानि ऋग्वेदादीन्येकविंशति शास्त्राणि परमेश्वरेण ऋषिभिश्च शुभमार्गनियोजकानीति मत्वा लोकानुकम्पया प्रकटीकृतानि तान्येव मान्यपुरुषैर्निजधर्मवृद्ध्यै बोध्यानि, तदितराणि मनुष्यप्रणीतानि पुराणादीनि न। एतत् सत्याष्टके प्रथमं सत्यम् । अत्र च वसन्ततिलकाख्यं वृत्तम् ॥ १ ॥

( भा० टी० ) जो लोकोपकार के लिये परमेश्वर तथा ऋषियों ने ऋग्वेद आदि इक्कीस शास्त्र बनाये हैं उन ही को मान्य पुरुष अपने धर्म के लिये जानें। जो कि मनुष्यकृत पुराणादि जालग्रन्थ हैं उन के ऊपर कदापि विश्वास न करें । यह सत्याष्टक में पहिला सत्य कहा है ॥ १ ॥

---

× दयानन्दप्रणीतमेतत्सत्याष्टकम्--भाषायां समुपलभ्यते तदेव काव्यत्वेन मया समुद्भासितम् ।

आद्याश्रमे गुरुकुले गुरुसेवनादि
धर्मानुवर्तनपरं पठनादिकं यत् ।
वेदादिशास्त्रनिचयस्य तदेव मन्ये
सत्यं द्वितीयमुदितं मुनिना प्रसादात् ॥२॥

( सं० टी० ) ब्रह्मचर्याश्रमे गुरुकुलमाप्य गुरुसेवास्वधर्मानुष्ठानपूर्वकं यद्वेदादिसत्यशास्त्राऽध्ययनं तद्द्वितीयं सत्यम्, मुनिना दयानन्देन समुक्तमिति शेषः ॥ २ ॥

( भा० टी० ) ब्रह्मचर्य आश्रम में गुरुकुल जाकर गुरु-सेवा और स्वधर्मानुष्ठानपूर्वक जो वेदादि सत्यशास्त्रों का पढ़ना वह दूसरा सत्य माना गया है ॥ २ ॥

वेदोक्तधर्मपरिपालनमाश्रमेषु
सर्वेषु वर्णनियमान्नियमप्रभेदात् ।
संध्यादिनित्यविधिसेवनमादरेण
सत्यं तृतीयमपि वर्णितमेव देवैः ॥ ३ ॥

(सं० टी०) वर्णनियमपूर्वकं सर्वेष्वाश्रमेषु वेदोक्तधर्मपरिपालनम् आदरेण संध्यावन्दनाग्नि-होत्राद्यनुष्ठानं देवैर्दयानन्दस्वामिभिस्तृतीयं सत्यं वर्णितम् ॥ ३ ॥

( भा० टी० ) वर्ण भेद से सब आश्रमों में वेदोक्त धर्म

का पालन करना और भक्तिपूर्वक संध्या जप अग्निहोत्र आदि नित्य कर्म करना तीसरा सत्य कहा गया है ॥३॥

कालेस्वदारगमनं विधिना परस्ता
च्छौते स्मृतिप्रणिहिते नु रतिः स्वकृत्ये।
वेदोक्तपञ्चमितयज्ञविधानचिन्ता
तुर्यं निवेदयति सत्यपथं प्रभावात् ॥ ४ ॥

(सं० टी०) ऋतुसमये संस्कारविध्यनुकूल गर्भाधानसंस्कारपूर्वकं स्वदारगमनं श्रौतस्मार्त धर्मकृत्यानुगमनं पञ्चमहायज्ञविधेरनुष्ठानञ्च स्वथ-मेव चतुर्थं सत्यं निवेदयति ॥ ४ ॥

(भा० टी०) ऋतु समय में वैदिक रीतिपूर्वक अपनी स्त्री में गमन करना और श्रुतिस्मृतिप्रतिपाद्य धर्मानु-ष्ठान में तत्पर रहकर पञ्चमहायज्ञविधि का प्रतिदिन सेवन करना चोथा सत्य माना जाता है ॥ ४ ॥

नित्यं यमेषु नियमेष्वपि चानुरक्तिः
सत्सङ्गतिश्च परमात्मनि भावकृत्तिः।
योगेऽनुरक्तिरधिका परतोनुवान-
प्रस्थाश्रमानुसरणं किल पञ्चमं स्यात् ॥५॥

(सं० टी०) प्रतिदिनं यमनियमविचार-

करणं सत्सङ्गपूर्वकपरमात्मध्यानसाधनं योगाभ्यासाभ्यसनं वानप्रस्थाश्रमधारणञ्च पञ्चमं सत्यम् ॥ ५ ॥

( भा० टी० ) प्रतिदिन यम और नियमों का विचार करना, सत्सङ्ग में रहकर परमात्मा का ध्यान धरना, योगाभ्यास का विधान करते हुये वानप्रस्थ आश्रम का धारण करना, पांचवां सत्य माना जाता है ॥ ५ ॥

वैराग्ययोगवशतो विरतिप्रभावात्
संन्यासधारणमसक्तिरमुत्र भावे ।
वेदान्तशास्त्रपरिशीलनमात्मबुद्धा
षष्ठं समादिशतिसत्यमलं स्वभावात् ॥६॥

( सं० टी० ) विचारविवेकवैराग्यवशतः ऐहलौकिकपदार्थेष्वसक्तिः ततःपरं संन्यासाश्रम धृतिः आत्मबुद्धया वेदान्तशास्त्रपरिशीलनञ्च सर्वकर्मफलत्यागाद्यनुष्ठानविधानात्षष्ठं सत्यम् ६

(भा० टी०) विचार विवेक वैराग्यों के वश से सांसारिक पदार्थों में विरति करते हुये संन्यासाश्रम धारण कर ईश्वरध्यानपूर्वक वेदान्तशास्त्र का देखना छठा सत्य कहा गया है ॥ ६ ॥

विज्ञानपूर्वकमनर्थपराङ्मुखत्वं
जन्मादिबन्धनविभञ्जनभावुकत्वम् ।

सङ्गानुलब्धबहुदोषनिराकृतिश्च
संबोधयत्यनुगमादपि सप्तमं तत् ॥ ७ ॥

( सं० टी० ) ज्ञानविज्ञानाभ्याम् अनर्थेषु पराङ्मुखता सर्वानर्थजन्ममरणहर्षशोककाम क्रोधलोभमोहविनाशकारणोपगमनं संगदोष-त्यागानुष्ठानश्च सप्तमं सत्यमावेदयति ॥७॥

( भा० टी० ) ज्ञान और विज्ञान से अनर्थों से मन का हटाना, समस्त दोषों के मूल जन्म मरण हर्ष शोक कामादिकों का नाश करना, सङ्ग दोषों को दूर हटाना सातवां सत्य माना जाता है ॥ ७ ॥

क्लेशेतरातिगुणभावमितापरस्ताद्
भूतान्यतीत्य परमात्मपथं दिशन्ती ।
स्वाराज्यसिद्धिरिति या किल मोक्षमूला
तत्प्राप्तिरष्टममुदाहरति स्म सत्यम् ॥८॥

( सं० टी० ) अविद्याऽस्मितादिपञ्चक्लेश रहिता सत्वरजस्तमोऽतीता पञ्चमहाभूतातीत-गुणा परमात्मरूपं बोधयन्ती या स्वाराज्यसि-द्धिर्मोक्षमूला तत्प्राप्तिरष्टमं सत्यमादिशतीति भावः ॥ ८ ॥

( भा० टी० ) अविद्यादि पाञ्च क्लेशों से भिन्न तीनों गुणों से रहित पञ्चमहाभूतविकार से पर केवल ईश्वर का गुण बतलाने वाली मोक्षमूल जो स्वाराज्यसिद्धि उस का पाना आठवां सत्य माना गया है ॥ ८ ॥

सत्याष्टकं हृदि विचार्य मनुष्यलोके
श्रीवर्तमानकविरत्नकृतं मनुष्याः ।
ये ये स्वकार्यमनुयान्ति विधिप्रदिष्टं
ते ते पराभवपदं न हि यान्ति दैवात् ॥९॥

( सं० टी० ) श्रीवर्तमानकविरत्नकृतमेतत् सत्याष्टकं हृदि विचार्य ये ये पुरुषाः विधिविहितं स्वस्वकार्यमनुयास्यन्ति ते ते दैवात्कदापि पराभवं न यास्यन्तीति भावः ॥ ९ ॥

( भा० टी० ) वर्तमान कविरत्न का बनाया हुआ यह सत्याष्टक, जो पुरुष अपने हृदय में विचार कर वेदोक्त अपने २ कर्मों को करेंगे वे कदापि पराभव को प्राप्त नहीं होंगे ॥ ९ ॥

इति श्रीमद्वर्तमानकविरत्नाऽखिलानन्दशर्मप्रणीतं
सटीकं सत्याष्टकं पूर्तिमगात् ॥ ओ३म् ॥

—:०*०:—

अतः परं * गप्पवर्णनकाव्यं प्रारभ्यते यस्यायमाद्यः श्लोकः—

व्यासेन सूत्ररचनापटुना न यानि
सम्पादितानि रचितानि च यानि धूर्तैः।
अष्टादशापि किल तानि पुराणकानि
मिथ्येति दोषभरितानि विदन्तु विज्ञाः॥१॥

( सं० टी० ) वेदान्तदर्शनसूत्रकारेण महर्षिणा व्यासेन यानि न सम्पादितानि, प्रत्युत स्वार्थसाधनदक्षैर्धूर्तैर्यानि रचितानि, तानि किलाष्टादशपुराणकानि। कुत्सायाङ्कन्। सर्वे विज्ञाः मिथ्यादोषग्रस्तानि अतएवाप्रमाणभूतानि च विदन्तु तेषु विश्वासं मा कुर्वन्त्विति भावः। एतदाद्यङ्गप्पम्। काव्येत्र वसन्ततिलकं वृत्तम् ॥१॥

(भा० टी०) वेदान्तदर्शन के बनाने वाले महर्षि व्यास जी ने जिन को नहीं बनाया, बल्कि अपने मतलब के हुशियार पोप लोगों ने जिन को गढा है, ऐसे मिथ्या दोषग्रस्त अप्रमाण अठारहों पुराणों को विद्वान् जन कदापि न मानें। यह स्वामी जी ने पहिला गप्प बतलाया है ॥ १ ॥

* भ्वादेराकृतिगणत्वाद् गप्ल मिथ्यापरिभाषणे इति धातोरौणादिक प्रत्यये गप्पमिति भवति ॥

पाषाणमूर्त्तिमधिरोप्य कृतास्ति लोके
या मन्दिरेषु मनुजानुकृतिप्रतिष्ठा ।
सा वेदमार्गविहिता न, ततो विरुद्धे-
त्येतद् द्वितीयमपि गप्पमलं विचार्यम् ॥२॥

(सं० टी० ) या किल मन्दिरेषु चेतनेतर शिलाविनिर्मितमूर्तिमवस्थाप्य मनुष्यरूपराम कृष्णादिप्रतिकृतिपूजा मनुजैः कृतास्ति सा वेदमार्गविहिता न, प्रत्युत ततो विरुद्धास्ति, एतद् द्वितीयं गप्पं विद्वज्जनैर्बोध्यम् ॥ २ ॥

( भा० टी० ) जो कि आज कल मन्दिरों में पत्थर की मूर्त्ति रख कर रामादि मनुष्यों की पूजा करना है वह वेदविरुद्ध है। इस लिये उस को दूसरा गप्प मानना चाहिये ॥ २ ॥

शैवं जिनेन्द्रमतमन्यदतः पृथिव्यां
रामानुजादिमनुजैरुपकल्पितं यत् ।
श्रीवैष्णवादिकमनन्तविपत्तिमूलं
सर्वं मृषेति परिचिन्त्य परित्यजन्तु ॥३॥

(सं०टी०)पृथिव्यां यन्मनुष्यैः सर्वविपत्तिमूलं शैवशाक्तवैष्णववल्लभरामानुजजैनबौद्धचार्वाक

ब्राह्मादिमतजातं परिकल्पितमस्ति,तत्सर्वं मिथ्या दुःखमूलमिति मत्वा सर्वे परित्यजन्तु।
एतदेव तृतीयं गप्पमिति विदांकुर्वन्तु ॥ ३ ॥

( भा० टी० ) इस भारतवर्ष में जो कि आज कल मनुष्यों ने नवीन२ शैवशाक्त आदि नौ सौ निन्यानवें ९९९ मत मान रक्खे हैं वे सब झूंठे और दुःख में ले जाने वाले नाना विपत्तियों के मूल जान कर विद्वान् लोक उन में कदापि विश्वास न करें। यही महर्षि दयानन्द तीसरा गप्प मानते हैं ॥ ३ ॥

यैरत्र विश्वबलये नरकोन्मुखानि
हिंसापराणि बलिदानमयानि यत्नात् ।
विस्तारितानि विकृतानि त एव सर्वे
तन्त्रादयोऽपि परिहेयतया विवेच्याः ॥४॥

( सं० टी० ) अत्र संसारे नरकप्रवर्त्तकानि हिंसाप्रधानानि बलिदान मद्यपान मांसभक्षणादीनि कुकर्माणि यैर्विस्तारितानि ते तन्त्रादयो ग्रन्थाअपि सर्वैस्त्याज्याः, एतदेव चतुर्थं गप्पम् ॥

( भा० टी० ) इस संसार के बीच में दुःख में ले जाने वाले, हिंसा कराने वाले, बलिदान, मद्यपान, मांस भक्षण आदि कुकर्म जिन्हों ने चलाये, ऐसे तन्त्र ग्रन्थों को कोई

महाशय विद्वान् न देखें। यही स्वामी जी ने चौथा गप्प बतलाया है ॥ ४ ॥

यत्सेवनेन परिनश्यति शीघ्रमेव
लोके मतिर्मतिमतामपि सर्वथैव।
मद्याहिफेनविजयाकृतमालजातं
सर्वं तदार्यपुरुषैः परिहेयमारात् ॥ ५ ॥

( सं० टी० ) येषां सेवनात् मतिमतामपि सत्वरं मतिः सर्वथा नश्यति तन्मद्यादि जातमार्यैर्न सेव्यम्। एतदेव पञ्चमं गप्पम्। "बुद्धिं लुम्पति यद् द्रव्यं मदकारि तदुच्यते" इति शार्ङ्गधरः ॥ ५ ॥

( भा० टी० ) जिन के सेवन से बुद्धिमानों की भी मति शीघ्र ही बिलकुल नाश को प्राप्त हो जाती है, ऐसे शराब, अफ़ीम, भांग, गांजा, तमाकू वग़ैरह जितनी नशे की चीज़ें हैं सब को छोड़ना चाहिये। यह पांचवां गप्प है ॥ ५ ॥

योषां विहाय निजधर्मरतां परस्त्री
संभोगपापपरिवर्धनदत्तभावाः।
ये ये जगत्यनुदिनं विचरन्ति ते ते
धूर्त्ताइति स्वहृदयेषु विचारयन्तु ॥ ६ ॥

( सं० टी० ) निजधर्मः पतिशुश्रूषा तद्रतां निजपत्नीं विहाय परस्त्रीसंभोगएव पापम् । तत्परिवर्धने दत्तभावाः सन्तः ये ये पुरुषाः जगति अनुदिनं विचरन्ति ते ते धूर्ता इति सर्वे जानन्तु । एतदेवाधर्मपरत्वात्षष्ठं गप्पम् ॥ ६ ॥

( भा० टी० ) सेवा में तत्पर अपनी स्त्री को छोड़कर जो पुरुष इस संसार में परस्त्री में व्यभिचार करने को तत्पर होते हैं वह धूर्त्त समझने चाहियें यह छठा गप्प माना गया है ॥ ६ ॥

द्यूतं तथा परविनिन्दनमात्मभाव-
श्चौर्यं कुसङ्गइति लोकतले निषिद्धम् ।
यद्यत्प्रवृत्तमलमस्ति तदेव सर्वं
मान्यैर्जनैरनुदिनं परिहेयमेव ॥ ७ ॥

( सं० टी० ) लोकतले यद्यन्निषिद्धं द्यूतं-परनिन्दनम्-अभिमानित्वं-चौर्यं-कुसङ्गादिकं च प्रवृत्तमस्ति तत्सर्वं मान्यैर्जनैः प्रतिदिनं त्याज्यम् । एतदेव सप्तमं गप्पम् ॥ ७ ॥

( भा० टी० ) इस संसार में जो जो निषिद्ध जूआ, दूसरे की बुराई, अभिमान, चोरी, कुसङ्ग आदि फैले हुये

हैं वह प्रति दिन छोड़ने चाहियें। यह सातमां गप्प बतलाया है ॥ ७ ॥

मिथ्याविकत्थनपरापगुणानुवाद-
मात्सर्यरागपरवञ्चकताच्छलानि ।
बोध्यानि धर्म्मनिरतैरखिदुःखहेतु-
भूतानि गप्पमिदमष्टममुक्तमारात् ॥८॥

(सं० टी०) मिथ्याविकत्थनं-परदोषकथनं-मात्सर्यकरणं-विषयरागवर्धनं-परवञ्चकत्वमित्यादीनि यानि कुकर्माणि तानि सर्वैरपि त्याज्यानीति भावः। एतदेवाष्टमं गप्पम् ॥ ८ ॥

( भा० टी० ) झूंठ कहना, दूसरे के दोषों का कहना, छछोंड़पन करना, विषयों में ज़ियादहतर फंसना आदि जितने कुकर्म हैं उन को सब आर्य महाशय छोड़ें। यही आठवां गप्प है ॥ ८ ॥

एतन्मया निगदितं लघुकाव्यरत्ने
गप्पाष्टकं यदुदितं मुनिनापि हर्षात् ।
नैजेषु बुद्धिपटलेषु विलिख्य सर्वै
रालोच्यमेतदनुकूलतयैव हेयम् ॥ ९ ॥

( सं० टी० ) अत्र लघुकाव्यसंग्रहे-यन्

मुनिना दयानन्देन भाषया निदर्शितं तद्गप्पाष्टकं काव्यरूपेण मयोक्तम्। तदेतत्सर्वं विचार्य निजनिजधर्मानुरताभवन्तु। पूर्वोक्तगप्पाष्टकाद् दूरन्तरं निवसन्त्विति भावः ॥ ९ ॥

( भा० टी० ) इस [ लघुकाव्यसंग्रह ] में जो स्वामी दयानन्द जी ने आठ गप्प बतलाये थे वह काव्यरूप से वर्णन किये गये। इन को हृदय में विचारके अपने २ धर्मानुकूल कर्मों में सब महाशय प्रवृत्त होकर अखिलानन्दों का अनुभव करें ॥ ९ ॥

इति श्री सद्वर्त्तमानकविरत्न-
अखिलानन्दशर्म्मप्रणीते लघुकाव्यसंग्रहे
सटीकं गप्पाष्टकं
समाप्तिमगमत् ॥ × ॥

—:०:—

२८-२-१९०७ ईस्वी

———

# विज्ञापन

सर्व सज्जन महाशयों को विदित हो कि वर्तमान कविरत्न-पं० अखिलानन्द शर्मा शास्त्री जी का बनाया हुआ " बृहत्काव्य-संग्रह " बहुत शीघ्र छपकर तैय्यार होगा। जिस का मूल्य ॥) मात्र होगा । ग्राहक महोदय नीचे लिखे पते पर शीघ्र पत्रव्यवहार करें ॥ उस में इतने ग्रन्थ हैं-

१-आर्यवृत्तेन्दुचन्द्रिका-छन्दोज्ञान के लिये है ॥

२-वार्षिकोत्सवचंपू-जिस में सालाना जलसे हैं ॥

३-परोपकारकल्पद्रुम-नाम ही से अर्थ जानिये ॥

४-गुरुकुलोदयकाव्य-देखने से ही मालूम होगा ॥

५-उपनयनप्रशंसन-क्या ही अच्छा काव्य है ॥

६—विवाहविनोदकाव्य—विवाह का वर्णन है ॥

७—शोकसंमूर्छनकाव्य—देखते ही रुला देता है ॥

८—विद्याविनोदकाव्य—स्वयं ही खुलासा है । यह ८ विषय हैं ॥